ओ३म्

# ब्रह्मसूत्र मीमांसा

## तथा च

# रत्नप्रभादिव्याख्यानां विभ्रान्तेः प्रदर्शनम्


लेखकः प्रकाशकश्च

**रामतीर्थ दण्डी संन्यासी**

शीततौं निवासः

**सोनियां मन्दिरम्, पुराना बाजार, लुधियाना (पंजाब)**

ग्रीष्मतौं निवासः

**राम भवनम्, भूपतवाला, हरिद्वारम् (उ०प्र०)**



पुस्तकप्राप्तिस्थानम् :

**पंडित अमोलकराम ज्योतिषी**

**सोनियां मन्दिर, पुराना बाजार, लुधियाना (पंजाब)**

प्रथमावृत्तिः— १००० प्रतयः

वैक्रमाब्दः २०२६, राष्ट्रीयाब्दः १९९१, ख़ैस्ताब्दः १९६९



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



# भूमिका

प्रियपाठकमहाभागाः !

ब्रह्मसूत्रस्य ( वेदान्तदर्शनाख्यया सुप्रख्यातस्य ) शांकर-भाष्यम् तदुपरि रत्नप्रभा आनन्दगिरिकृतटीका, वेदान्तकल्पतरुः भामती चेति चतस्रो विश्रुतव्याख्या वर्तन्ते । ब्रह्मसूत्रस्य चतुर्थाध्यायस्य चतुर्थपादश्छान्दोग्योपनिषदोऽष्टमाध्यायमवलम्ब्य वर्तते निर्मितः । 'संकल्पादेव तु तच्छ्रुतेः' ( ब्र.सू. ४-४-८ ) इति सूत्रस्य भामतीं विहाय रत्नप्रभादिव्याख्यासु भाष्यविपरीतस्य सर्वथाऽसङ्गतस्य च 'एवं परविद्या फलमुक्तम् इदानीमपरविद्याफलं प्रपञ्चयति' इत्यादिकपाठस्य रचना कृतेति दर्शयितुं मया, 'ब्रह्मसूत्रमीमांसा तथा च रत्नप्रभादिव्याख्यानां विभ्रान्तेः प्रदर्शनम्' इत्यभिधाना लघुपुस्तिकेयं विरच्यते । अस्यां पुस्तिकायां ब्रह्मसूत्राणां समीचीना मीमांसा रत्नप्रभादिव्याख्यानां विभ्रान्तेश्च प्रदर्शनं करिष्यते । यद्यपि ब्रह्मसूत्राणां मीमांसा 'विचारसागर के अन्तिम सिद्धान्त का निराकरण' इति पुस्तके प्रकाशिता मया तथापि साऽपूर्णा यतो हि तत्र केवलं षोडशसूत्राणामेव मीमांसा वर्ततेऽत्र तु चतुर्थाध्यायस्य चतुर्थपादस्थानां सर्वेषां सूत्राणां मीमांसेति वैशिष्ट्यमस्य ।

भवतामात्मा

रामतीर्थवर्णी संन्यासी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ओ३म्


श्री १०८ ईश्वर मठ पुस्तकालय

# ब्रह्मसूत्रमीमांसा

## तथा च

# रत्नप्रभादिव्याख्यानां विभ्रान्तेः प्रदर्शनम्

---

नमोऽस्तुब्रह्मणे तस्मै, सर्वदैवस्वयम्भुवे ।
मूलभूताय जगतस्तथा वेदद्रुमस्य च ॥

## चतुर्थाध्याये चतुर्थः पादः

शाङ्करभाष्यम्—

( अत्र पादे ब्रह्मप्राप्ति-ब्रह्मलोकस्थिति-निरूपणम् )

मीमांसा—अस्मिन् चतुर्थपादे सगुणब्रह्म प्राप्तेर्ब्रह्मलोकस्थितेश्चास्ति निरूपणं यतो हि केवलमात्मज्ञानफलस्वरूपाया विदेहमुक्तेः कैवल्यमुक्तेर्वा निरूपणं चतुर्थाध्यायस्य प्रथमपादे वर्तते यथा—

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद् व्यपदेशात्'

( ब्रह्म. सू. ४।१।१३ )

इत्यादिनाऽऽत्मज्ञानस्य यथार्थबोधे सति आत्मज्ञानिनः पूर्वकृतपापकर्मणां विनाशो जायते ज्ञानोत्तरकाले च कृतकर्मणां स्पर्शो न भवतीत्यभिधीयते ।

'इतरस्याप्येवमश्लेषः पाते तु' ( ब्रह्म. सू. ४-१-१५ ) इत्यादिना आत्मज्ञस्य पुण्यकर्मणामप्यश्लेषो विनाशश्च जायते देहपाते च मुक्तिरवाप्यत इत्युच्यते ।

'भोगेन त्वितरे क्षपयित्वा सम्पद्यते ।' ( ब्रह्म. सू. ४।१।१९ )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षयः उक्तः । इतरे तु आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते इत्यादिकं शांकरव्याख्यानम् ।

इत्थं प्रथमपादे विदेहमुक्तिर्निरूपिता । प्रथमसूत्रम्—

**शाङ्करभाष्यम्**—एवमेवैष सम्प्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः देहादिविलक्षणमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत् ।

**अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति** । ( छान्दोग्य ८-३-४ ) ।

**शाङ्करभाष्यम्**—अस्माच्छरीरात् समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः । न त्वासनादिव समुत्थायेतीह युक्तं स्वेनरूपेणेति विशेषणात् । न ह्यन्यत उत्थाय स्वरूपं सम्पत्तव्यम् । स्वरूपमेव हि तत्र भवति प्रतिपत्तव्यं चेत् स्यात् ।

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५**

**शाङ्करभाष्यम्**—स्थितमेतत् स्वेनरूपेण (छान्दो. ८-३-४) इत्यात्ममात्ररूपेणाभिनिष्पद्यते नागन्तुकेन पररूपेणेति ।

**मीमांसा**—इत्थं दहरविद्यायास्तृतीयखंडस्थश्रुत्याधारेण तथेन्द्रप्राप्तश्रुत्यनुसारेण भगवता वेदव्यासेन भाष्यकारेण श्रीमच्छङ्कराचार्येण च—

'सम्पद्याविर्भावः स्वेन शब्दात् ॥१॥ मुक्तः प्रतिज्ञानात् ॥२ आत्मा प्रकरणात् ॥३ अविभागेन दृष्टत्वात् इति सूत्रचतुष्टयमनुसृत्य संप्रसादनामक आत्मज्ञानी स्थूलदेहे सत्यपि मुक्तोऽभ्युपगम्यते ।

**भाष्यम्** – अधुना तु तद्विशेषबुभुत्सायामभिधीयते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादिसत्यसंकल्पावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते । कुतः–उपन्यासादिभ्यस्तथात्वावगमात् । तथाहि—

'य आत्माऽपहतपाप्मा (छान्दो. ८.७.१) इत्यादिना 'सत्यकामः, सत्यसंकल्पः' (छा. ८.७.१) इत्येवमन्तेनैवमात्मकतामात्मनो बोधयति । "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः । (छा. ८-१-५)

**मीमांसा**–जैमिनिमुनिना पूर्वोक्तेन्द्रप्राप्तिविद्याश्रुतेरुपक्रमोपसंहाराभ्यां तथा दहरविद्याविषयकश्रुत्युपन्यासान्मुक्तात्मनि सत्यकामादिब्राह्ममैश्वर्यं व्यावहारिकमित्यभ्युपगतं यतः सम्प्रसादाभिधानोऽयमात्मज्ञानी स्थूलदेहसहित एव वर्तते ।

**सू. ६. चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥**

**मीमांसा**–औडुलोमिराचार्य उपन्यासस्य पूर्वभागद्वारा आत्मनः शुद्ध चैतन्यमात्र रूपमुपादाय सत्यकामत्वादिकोत्तरभाग आत्मज्ञान प्रशंसामात्रपरकं इति मन्यते । अतोऽव्यावहारिकोऽयम् । आत्मज्ञानी चैतन्यमात्ररूपेण स्थितिं लभते । तस्मिन् सत्यकामत्वादिकमैश्वर्यं न वोभवीति ।

**सू ७. एवमप्युपन्यासात्पूर्वभावादविरोधं वादरायणः**

**(ब्रह्मसूत्र ४.१.४.७)**

**शांकरभाष्यम्** – एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं वादरायण आचार्यो मन्यते ।'

**मीमांसा**–भगवान् व्यासो वादरायणः सत्यकामाद्यैश्वर्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपमुपन्यासं केवलमात्मज्ञानप्रशंसापरकमिति न मन्यते किन्तु व्यावहारिकं मन्यते। अतः मुक्तात्मनः पारमार्थिक चैतन्यरूपेणावस्थानं, सत्यकामत्वाद्यैश्वर्यस्थ व्यावहारिकरूपेणावस्थानं च युक्तमेव यतो ह्यनेन 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय' इत्यादिपूर्वोद्धृत श्रुतिभाष्यानुसारं शरीरे आत्मबुद्धिः परित्यक्ता किन्तु शरीरत्यागो न कृतः। अतः सम्प्रसादाभिधानोऽयमात्मज्ञानी जीवन्मुक्तः। इत्थं चास्य चैतन्यमात्ररूपत्वं सत्यकामादिरूपत्वं च वादरायणव्यासाभिमतं युक्तमेव। नात्र कश्चिद् विरोधो विद्यते

**संकल्पादेव तु तच्छ्रुतेः ॥८॥**

'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ (छान्दोग्योप. ८-१-६)

**शांकरभाष्यम्**–अथ येऽन्य इहलोक आत्मानं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति राज्ञ इव सार्वभौमस्येह लोके।"

## द्वितीयखण्डः

**शांकरभाष्यम्**–कथं सर्वेषु लोकेषु कामचारो भवतीत्युच्यते? य आत्मानं यथोक्तलक्षणं हृदि साक्षात् कृतवान् वक्ष्यमाणब्रह्मचर्यादिसाधनसम्पन्नः सन् ततस्थांश्च सत्यान् कामान् 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते।
(छान्दोग्योप. ८.३.१)

**शांकरभाष्यम्**–स त्यक्तदेहो यदि पितृलोकामः 'अथ य एष सम्प्रसादः (छान्दोग्योप. ८.३.४) 'एवमेवैषसंप्रसादः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(छान्दोग्योप. ८.१२.३) 'स यदि पितृलोककामो भवति ।। (छान्दोग्योप. ८.२.१)

## सप्तमः खण्डः

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वान्कामान् यस्तमात्मानमनुविद्य विजानातीति स ह प्रजापतिरुवाच । (छान्दो० ८.७.१)**

**शांकरभाष्यम्**—य आत्माऽपहतपाप्मा विजरो विमृत्युः विशोकः विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, यस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितम्, यस्मिन् कामाः समाहिताः सत्या अनृतापिधानाः, यदुपासनसहभविब्रह्मचर्यं साधनमुक्तम्, उपासनफलभूतकामप्रतिपत्तये च मूर्धन्यया नाड्या गतिरभिहिता सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यः, विजिज्ञासितव्यः—स्वसंवेद्यतामापादयितव्यः । किं तस्यान्वेषणाद् विजिज्ञासनाच्च स्यात् इत्युच्यते । 'स सर्वांश्च लोकानाप्नोति सर्वाञ्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्विष्य विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्वलोककामावाप्तिः, सर्वात्मता फलं भवति इति ह किल प्रजापतिरुवाच ।। (छान्दो. ८.७.१)

**'स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणं युक्तएवमेवायमस्मिन् शरीरे प्राणो युक्तः (छान्दो. ८.१२.३)**

**शांकरभाष्यम्**—स संप्रसादः स्वेनरूपेण तत्र स्वात्मनिस्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिन्द्रियाद्यात्मना जक्षत् हसन्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्षयन् वा भक्ष्यानुच्चावचानीप्सितान् क्वचिन्मनोमात्रैः संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन् स्त्र्यादिभी रममाणश्च मनसैव 'अथ यो वेदेदं न मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते । (छान्दो. ८.१२.५) ।

'य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषां सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच । (छान्दो. ८. १२. ६)

**मीमांसा**—इत्थं स्पष्टं प्रतीयते यद् दहरविद्याया इन्द्रप्राप्तिविद्यायाश्च सम्प्रसादनामक आत्मज्ञान्येक एव । यावदस्य स्थूलशरीरेण सह सम्बन्धोऽवतिष्ठते तावत् 'अथ य एष संप्रसादः' 'एवमेवैषसंप्रसादः' इत्यादि श्रुतिप्रामाण्येन एष इति पदवाच्यो भवति । स्थूलदेहपाते सति यदायं केवलसूक्ष्मशरीरेण समवेतो भवति तदा 'स यदि पितृलोककामो भवति' इत्यादि श्रुतिभिः 'सः' इति वाच्यो जायते । 'यस्तमात्मानमनु विद्य विजानाति' इति श्रुतेः 'विजानातीति' पाठेन सिद्धयति यदयमात्मज्ञानी स्थूलशरीरसहितोऽपि सन् सर्वकामानुपभुंक्ते केवलसूक्ष्मशरीरोऽपि सन् दिव्यविषयैः सह रमते यथा 'स तत्र पर्येति' इति श्रुतेः 'नोपजनं स्मरन्निदं शरीरम्' इत्यादि पाठो द्योतयति यथा रथे युक्तः प्रशिक्षितोऽश्वः सारथेस्तन्द्रादिकारणादसावधानत्वेऽपि रथं रक्षयति तथैवात्मज्ञानिनः सविकल्पसमाधेरवस्थायां स्थूलशरीरविस्मृतौ पञ्चवृत्तिः प्राणस्तस्य (स्थूलदेहस्य) रक्षां विधत्ते । एवमात्मज्ञानी स्थूलशरीरसहितोऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानसिकविषयैः सह रमते तथा च 'ब्रह्मलौकिकैर्वा इत्यादि-भाष्यानुसारं 'यो वेदेदं मन्वानीति' श्रुत्यनुसारं च मन आत्मनो दिव्यचक्षुः अनेन मनसा स सर्वान् कामान् पश्यन् रमते य एते ब्रह्मलोके भोगाः । इत्थमात्मज्ञानी सूक्ष्मशरीरसहितः सन्नपि मानसिकभोगानां भोक्ता भवति । परन्तु 'अथ य इहात्मानमनुविद्य व्रजन्ति 'इत्यादिश्रुतौ 'व्रजन्तीति' पाठः स संप्रसादाभिधान आत्मज्ञानी मरणानन्तरमेव केवलं सूक्ष्मशरीरद्वारा ब्रह्मलोक एव संकल्पमात्रेण पित्रादिभोगान् प्राप्नोतीति द्योतयति सूत्राणामीदृशी मीमांसा श्रुतेर्भाष्यस्य चानुसारिणी वर्तते ।

**अतएव चानन्याधिपतिः ॥ ९ ॥**

तेषां सर्वेषु लोकेषु कामचारो भवति (छा. ८.१.६)

**भावार्थः**—यया कयाप्युपासनाया ब्रह्मलोकं प्राप्तस्यात्मनः स्वाम्यन्तराभावात् स स्वतन्त्रो भवति ।

**अभावं बादरिराह ह्येवम् ॥१०॥**

**शांकरभाष्यम्**—तस्मादभावः शरीरेन्द्रियाणां मोक्षे ।

**मीमांसा**—अस्य सूत्रस्येत उत्तरवर्तिसूत्राणां च भाष्ये 'मुक्तः प्रतिज्ञानात् , इतिसूत्रस्थस्य मुक्त इति पदस्यानुवृत्तिः कृता यतोऽत्र मुक्तपदं स्थूलशरीरसम्पन्नस्याथवा सूक्ष्मदेहसहितस्येत्युभयविधयोरेव जीवन्मुक्तयोर्बोधकम् । 'मुक्तः प्रतिज्ञानात्' इति सूत्रं विहायान्यस्मिन् कस्मिंश्चिदपि सूत्रे मुक्तपदं न विद्यते किन्तु प्रकरणमिदं ब्रह्मलोकस्य वर्ततेऽतो ब्रह्मलोकी मुक्तः । तस्यावस्थैव मुक्तिर्मोक्षो वाभिधीयते । अतः बादरेराचार्यस्य मते मोक्षे स्थूलशरीरस्येन्द्रियाणां चाभावो भवति ।

**भावं जैमिनिर्विकल्पामननात् ॥११॥**

**शांकरभाष्यम्**—जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि से-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्द्रियस्य भावं युक्त प्रतिमन्यते यतः स 'एकधा भवति त्रिधा भवति । (छान्दो.०.२६.२)

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥**

**शांकरभाष्यम्**—बादरायणः पुनराचार्योऽत एवोभयलिङ्ग-श्रुतिदर्शनादुभयविधत्वं साधु मन्यते यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा त्वशरीरतां तदाऽशरीर इति । सत्यसंकल्पत्वात् । संकल्पवैचित्र्याच्च । द्वादशाहवत् । यथा-द्वादशाहः सत्रम् अहीनश्च भवति उभयलिङ्गश्रुतिदर्शनात् एवमिदमपीति ।

**तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥**

**शांकरभाष्यम्**—यदा तनोः सेन्द्रियस्य शरीरस्याभावः तदा यथा सन्ध्ये (स्वप्ने) स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वपि उपलब्धिमात्रा एवं पित्रादिकामा भवन्ति, एवं मोक्षेऽपि स्युः । एवं ह्येतदुपपद्यते ।

**भावे जाग्रद्वत् ॥१४॥**

**शांकरभाष्यम्**—भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पितृकामा भवन्ति, एवं मुक्तस्याप्युपपद्यते ॥

**मीमांसा**—अथ य इहात्मानमनुविद्य व्रजन्ति (छान्दो. ८.१.६) इति श्रुतेः व्रजन्तीति पाठानुसारमधिकारी स्थूल-शरीरत्यागानन्तरमेव ब्रह्मलोकं गच्छति अतस्तस्य स्थूलशरीरं न पितृजन्यं किन्तु मुक्तात्मनः स्वकल्पनाप्रसूतम् ॥

**प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥**

'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' इत्यादि (छा.७.२१.२)

**मीमांसा**—यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तियोगात् एवमेकोऽपिसन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति—अनेकशरीराणि धारयति तानि शरीराण्यपि मुक्तात्मशरीरसदृशान्येव भवन्ति। यद्यपि स एकधा भवति त्रिधा भवतिं पञ्चधा सप्तधा नवधा। इत्यादि श्रुतिः सप्तमेऽध्याये निर्गुणभूमाविद्यास्तुत्यर्थं प्रवृत्ता तथापि पादेऽस्मिन् सगुणविद्याफलप्रतिपादिकाः सर्वा अपि श्रुतयो गृहीता इति कल्पनं युक्तमेव अत उक्तसूत्रानुसारं मुक्तात्मानेकशरीराणि धारयति।

**शांकरभाष्ये**—कथं पुनर्मुक्तस्यानेकशरीरावेशादि लक्षणमैश्वर्यमभ्युपगम्यते यावता 'तत् केन कं विजानीयात् (बृहदा. ४.५.१५) 'न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात् (बृहदा.४.३.३०) सलिल एको द्रष्टाऽद्वैतो भवति (बृहदा.४.३.३२) इति चैवं जातीयका श्रुतिर्विशेषज्ञानं वारयतीति। अत उत्तरं पठति—

**स्वाप्ययसंपत्त्योरेकतरापेक्षमाविष्कृतं हि। (४.४.१६)**

स्वाप्ययः—सुषुप्तम् 'स्वयमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते। (छान्दो.८.१.१) इति श्रुतेः। सम्पत्तिः—कैवल्यम्। ब्रह्मैव सन् ब्रह्माप्येति (बृहदा.४.४.६) इति श्रुतेः। तयोरन्यतरामपेक्ष्यैतद् विशेषसंज्ञाभाववचनम् क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते क्वचित् कैवल्यावस्थाम्। कथमवगम्यते। यतस्तत्रैवैतदधिकारवशादाविष्कृतम् एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति। (बृहदा. २.४.१)

यत्र त्वस्य सर्वमात्मैवाभूत् (बृहदा.२.४.१४) यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति। (बृहदा.४.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३.१९, माण्डूक्य ५) सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरे यत्रैतदैश्वर्यमुपवर्ण्यते तस्माददोषः ।।१६।।

**रत्नप्रभा–**

एवं विशेषज्ञानाभाववचनं सुषुप्तिमुक्त्यन्यतरापेक्षसगुणोपासकस्य भोगोक्तौ न विरुद्ध्यते, भिन्नविषयत्वात् ।

भामतीव्याख्या–'स्वाप्यय: आसु काश्चित् श्रुतय: सुषुप्तिमपेक्ष्य काश्चित्तु संपत्तितदधिकारात् । ऐश्वर्यश्रुतयस्तु सगुणविद्याविपाकापेक्षा: मुक्त्यभिधाने तु तदवस्थासत्तेर्यथाऽरुणदर्शने संध्यायां दिवसाभिधानम् ।

**आनन्दगिरीयव्याख्या—**

विशेषज्ञानाभावाभिधानं सुषुक्तिमुक्त्योरन्यतराभिप्रायेण युक्तम् । इदानीमैश्वर्याभिधानस्य सगुणविद्याविषयत्वेन भिन्नगोचरत्वान्न विरोधाशंकेत्याह सगुणेति । कथं तर्हि सगुणविद्याफले मुक्तिशब्दप्रवृत्तिरित्याशंक्य–सन्ध्यायां दिवा शब्दवत् प्रत्यासत्तिमात्रेणेति मत्वाह–तस्मादिति ।।१६।।

**मीमांसा**–१. य: केवलपराविद्यया निर्गुणविद्यया आत्मविद्यया ब्रह्मविद्यया वा सम्पन्न: सन् स्थूलसूक्ष्मशरीरयुक्तो वर्तते ।

२. य: परापरविद्यया अथवा निर्गुणसगुणविद्यया सम्पन्न: सन् स्थूलसूक्ष्मदेहसहित: अथवा केवलसूक्ष्मदेहसहितो ब्रह्मलोके वर्तते ।

३. य: केवलं सगुणब्रह्मविद्यया सम्पन्न: सूक्ष्मशरीरसहितो ब्रह्मलोके वर्तते ।

४. य: पञ्चाग्निविद्यासम्पन्न: सन् सूक्ष्मशरीरेण सह ब्रह्मलोके वर्तते एते सर्वेऽपि ज्ञातृज्ञानज्ञेयरूपविशेषज्ञानयुक्ता अतस्ते जीवन्मुक्तास्तु सन्ति किन्त्वेतेषां मध्ये षोडशसूत्रं, भाष्यं,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याख्यान्तरसिद्धान्तं वाऽनुसृत्य कैवल्यमुक्तो विदेहमुक्तो वा नास्ति । अर्थात् विशेषज्ञानयुक्तः कोऽपि मुक्तो न सम्भवति ।

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ।।१७।।**

**भावार्थः** – ब्रह्मलोकस्थो मुक्तात्मा जगदुत्पत्त्यादिकार्यं कर्तुं न शक्नोति । प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ।

**भावार्थः**—उक्तश्रुत्यनुसारं ब्रह्मलोकी मुक्तात्मा स्वतन्त्रो भवति, अतः स जगत उत्पादनादिकार्यमपि कर्तुं शक्नोतीति चेदुच्यते तन्न समीचीनम् यतः जगदुत्पादनादिकार्यं सूर्यमण्डलावस्थितहिरण्यगर्भब्रह्मणो द्वारा, ईश्वर एव करोति ।

**शांकरभाष्यम्**—'विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि । इत्येवमादिः ।

**दर्शयतश्चैव प्रत्यक्षानुमाने ।।२०।।**

**शांकरभाष्यम्**—दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती

'न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति कुतोऽयमग्निः ।। इति (कठ.५.१५) श्वेता.६.१४ मुण्डक. २.२.१० न तद्भासयते सूर्यो न शशांको न पावकः।। (गीता १५.६) इति च ।

तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ।

**योगमात्रसाम्यलिङ्गाच्च ।।२१।।**

**शांकरभाष्यम्**—इतश्च न निरंकुशं विकारालम्बनानामैश्वर्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद् भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते ।

**अनावृत्तिः शब्दादनवृत्तिः शब्दात् ।।२२।।**

तयोर्ध्वमायन्नमृतत्वमेति (छा. ८.६.६) कठ. ६.१६ तेषां न पुनरावृत्तिः (बृ. ६.२.१५) एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते । (छा. ४.१५.६) ब्रह्मलोकमभिसम्पद्यते (छा. ८.१५.१) न च पुनरावर्तते (छा. ८.१५.१) कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्। (बृ. ४.३.१०)

**मीमांसा**—यो ब्रह्मलोकस्थो मुक्तात्मा परापरविद्यासम्पन्नः (यस्योपन्यासश्चतुर्थपादे मुख्यतया वर्तते) स आत्मज्ञान्येव न स ज्ञानान्तरमपेक्षते परं यो ब्रह्मलोकी मुक्तात्मा सगुणविद्यासम्पन्नो यश्च पञ्चाग्निविद्यासम्पन्नः इमौ ब्रह्मणो ज्ञानमवाप्य 'कार्यात्यये तदध्यक्षेण इति सूत्रानुसारं महाप्रलयागमनाद् ब्रह्मलोकविनाशे सति ब्रह्मणा सह परमपदरूपविदेहमुक्ता भवन्ति । ब्रह्मलोकमवाप्तस्य कस्यचिदपि जीवात्मनः पुनरावृत्तिर्न भवति यतो ब्रह्मलोकात् पुनरावर्तन-प्रतिपादकं किमपि सूत्रं ब्रह्मसूत्रेषु न विद्यते । अतो यो ब्रह्मलोकादपि पुनरावृत्तिं मन्यते यो ब्रह्मणोऽप्युच्चतरः सर्वज्ञत्वादिधर्मसमन्वितः कश्चिद्देवोऽस्तीति मन्यते, यो ब्रह्मलोकादप्युत्कृष्टतरं कंचन लोकं मन्यते, यो ब्रह्मणो मर्त्यलोकमागत्य कस्यचित् स्तुतिकर्तृत्वं प्रतिपादयति, योऽनेकविधोपन्यासादि द्वारा ब्रह्माऽज्ञः कामीचेति निरूपयति एतादृशानामित्येवमादिका सर्वा कल्पना वेदात्तदनुसारिब्रह्मसूत्राच्च विरुद्धयते अतः सर्वस्यां सृष्टौ ब्रह्मैव सर्वोत्तमोदेवः, ब्रह्मलोक एव सर्वोत्तमो लोकः, तत्र गतानां च पुनरावृत्तिर्न भवति । चतुर्थपादस्थसूत्राणां श्रुतिभाष्यानुसारिणीयं मीमांसा वर्तते । इति ब्रह्मसूत्रमीमांसा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ रत्नप्रभादिव्याख्यानां विभ्रान्तेः प्रदर्शनम्

संकल्पादेव तु तच्छ्रुतेः(ब्रह्मसूत्रे ४.४.८) अस्य सूत्रस्य रत्नप्रभाटीकायामानन्दगिरीयव्याख्यायां 'च एवं परविद्याफलमुक्तम्' इदानीमपरविद्याफलं प्रपञ्चयति' इत्थं वेदान्तकल्पतरुव्याख्यायां च 'अथ सगुणविद्याप्रपञ्च' इत्थं पाठो विद्यते। अनेन पाठेनैभिस्त्रिभिर्व्याख्याकर्तृभिः, 'सम्पद्याविर्भावः स्वेनशब्दात्' (ब्र०सू०४.४.१) इति सूत्रसप्तकद्वारा परविद्याफलरूपेण विदेहमुक्तिः स्वीकृता, अष्टमसूत्रात्प्रारभ्यावशिष्टसूत्रद्वारा चापरविद्याफलरूपेण ब्रह्मलोकभोगावाप्तिरङ्गीकृता परमयं तेषां विभ्रमः; यतो हि पूर्वोक्तमीमांसाद्वारा दहरविद्याश्रुतेः पूर्वार्द्धे, इन्द्रप्राप्तविद्याश्रुतेः पूर्वार्धे चात्मनो निर्गुणरूपोपन्यासो वर्तते, उभयविद्ययोः श्रुत्युत्तरभाग आत्मनः सगुणरूपोपन्यासः परं विद्ययोरनयोः श्रुतिषु केवलं परविद्यायाः केवलमपरविद्यायाश्च क्वचिदप्युपन्यासो न वर्तते। अत आसां व्याख्यानाम् 'एवं परविद्याफलमुक्तम् इदानीमपरविद्याफलं प्रपञ्चयति' इत्यादिकः पाठो भ्रममूलक एव।

२. एभिर्व्याख्याकृद्भिरौडुलोमिमतमनुसृत्य सत्यकामताद्यैश्वर्योपन्यासः केवलमात्मज्ञानप्रशंसार्थ इत्यङ्गीकृतः अतोऽयमव्यावहारिकः। अस्मादेव हेतोरेभिरात्मज्ञानी विदेहमुक्तोऽभ्युपगतः। परमेषैषां कल्पना विभ्रान्तिरेव यतः पूर्वोक्तमीमांसयास्योपन्यासस्याव्यावहारिकतयास्याधिकारिविषयसम्बन्ध प्रयोजनानामप्यभावो जातः। इत्थमपरविद्याफलप्रतिपादकानां सर्वेषां सूत्राणां वैयर्थ्यमापतितम्। अत आसां व्याख्यानामियं मान्यता कल्पना वा विभ्रान्ता।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३. आभिर्व्याख्याभिः स्थूलसूक्ष्मदेहसम्पन्नः ज्ञातृज्ञानज्ञेयरूपविशेषज्ञानान्वितश्च यः सम्प्रसादसंज्ञो ज्ञानी स विदेहमुक्तोऽभ्युपगतः परमिदमेषां मतं विभ्रान्तं यतः पूर्वोक्तमीमांसाद्वारा विशेषज्ञानिनि विदेहमुक्तत्वाभ्युपगमेन विदेहमुक्तौ विशेषज्ञानस्याभावं प्रतिपादयन्तीनां श्रुतीनां, सूत्राणां, भाष्यस्य, तथैवासां व्याख्यानां स्वकीयपाठस्यापि वैयर्थ्यमेवापद्यते अत आसां व्याख्यानां मतं विभ्रान्तियुक्तमेव मन्तव्यम् ।

४. आभिर्व्याख्याभिः स्थूलसूक्ष्मशरीरसहितो य आत्मज्ञानी स विदेहमुक्तोऽभ्युपगतः किन्त्विदमासां मतं विभ्रान्तमेव, यतः पूर्वोक्तमीमांसानुसारमित्थमभ्युपगमेन स्थूलसूक्ष्मदेहाभावे विदेहमुक्तिं प्रतिपादयन्त्याः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा.६.१४.१) इत्यादिकायाः श्रुतेः 'भोगेन त्वितरे क्षपयित्वा सम्पद्यते (ब्र.सू.४.१.१९) इति सूत्रस्य च वैयर्थ्यमापतितम् । यत आसां व्याख्यानामुक्तं मतं विभ्रान्तिविजृम्भितम् । इत्थं रत्नप्रभादिव्याख्यात्रयम्, अस्यानुसरणं विदधानाः, उपनिषद्रूपमूलवेदान्तमुपेक्ष्य केवलं प्रक्रिया रटन्तो वेदान्ताचार्या मदपेक्षया महान्तो विपश्चितः सन्तोऽप्यस्मिन् विषये भ्रान्ता एव । आशास्यते सत्यपक्षपातिनो विपश्चितः श्रुतिसूत्रशांकरभाष्यानुसारमात्मज्ञानिनो या जीवन्मुक्तावस्था तामेव विदेहमुक्तिं प्रतिपादयन्तीनामासां व्याख्यानाम् 'एवं परविद्याफलमुक्तम्—इदानीमपरविद्याफलं प्रपञ्चयति इत्यादि पाठस्य च बहिष्कारमवश्यं करिष्यन्ति । एवं रामतीर्थदण्डिसंन्यासिकृतेयं ब्रह्मसूत्रमीमांसा तथा च रत्नप्रभादि व्याख्यानां विभ्रान्तेः प्रदर्शनम् इत्यभिधाना लघुपुस्तिका समाप्ता । सत्यं ज्ञानमनन्तं ब्रह्म । ओं तत् सत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# रामतीर्थ दण्डी संन्यासी रचित पुस्तकें–



| | | |
|---|---|---|
| १ | शास्त्रीय धर्म दिवाकर | ( हिन्दी में ) |
| २ | वैदिक ब्रह्म विचार | ( हिन्दी में ) |
| ३ | वैदिक भक्तिज्ञानफलम् | ( संस्कृत में ) |
| ४ | वेदोक्त भक्तिज्ञान तथा इनका फल | ( हिन्दी में ) |
| ५ | वेदोक्त नित्यकर्म | " |
| ६ | तत्त्वमसि का अर्थ | " |
| ७ | विचारसागर के पूर्वापर सिद्धान्त में महाविरोध | " |
| ८ | रामायण सार संग्रह | " |
| ९ | रामानुभूति | " |
| १० | विचारसागर के अन्तिम सिद्धान्तका निराकरण | " |
| ११ | ब्रह्मसूत्र मीमांसा तथा च रत्नप्रभादि-व्याख्यानां विभ्रान्तेः प्रदर्शनम् | (संस्कृत में) |

---

नोट—दूरवर्ती को पुस्तक, वैरंग बुक पोस्ट से भेज दी जावेगी। पुस्तक प्राप्त होने पर डाक-व्यय देना होगा।

---

पुस्तक प्राप्ति स्थान—

**पं० अमोलकराम ज्योतिषी**

सोनियां मन्दिर, पुराना बाजार, लुधियाना (पंजाब)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri